# विश्वगुणादर्शचम्पूः

महाकविश्रीमद्वेङ्कटाध्वरिविरचिता,

योगीत्युपाभिधश्रीमद्गणेशसूरिसूनुना बालकृष्णशर्मणा
विरचितया 'पदार्थचन्द्रिका' टीकया सहिता ।

सेयं

मुम्बय्याम्

'जावजी दादाजी' इत्येतेषां निर्णयसागरमुद्रालयाधिपतिना
'तुकाराम जावजी' इत्यनेन स्वकीये
मुद्रणालये संमुद्य प्रकाशिता ।

शकाब्दाः १८२१, ख्रिस्ताब्दाः १८९९.

मूल्यमेको रूप्यकः

# अर्पणपत्रिका

इयं सटीका

## विश्वगुणादर्शचम्पूः

श्रीमत्सकलानवद्यविद्यानैपुण्यागण्यपुण्यकर्मदाक्षि-
ण्यनिखिलराजकार्यप्रावीण्यादिगुणगणम-
ण्डितानां निजकीर्तिधवलिमधवलित-
दशदिङ्मुखानां

तत्रभवतां

श्रीमतां कुरुन्दवाटमण्डलमहीभृतां
पट्टवर्धनकुलललामायमानानां
गणपतिराय ( बापूसाहेब )
इत्याख्यानां चरणयोः

तदीयाविगीतगुणानुरक्तेन टीकाकर्त्रा स्वान्तोद्भूतनैसर्गिकपूज्य-
भावेन, तदनुमत्या समर्पिता ।

ॐ

## नमः परमात्मने

# भूमिका—

भो भो विविधकाव्य-नाटकालंकार-साहित्यपारावारपारीणाः सहृदया मनीषिणः, विदांकुर्वन्तु तत्रभवन्तः— गीर्वाणभाषाऽपारपारावारतितीर्षूणां सरसकाव्यपरिशीलनतरणिसमारोहणं विना उपायान्तरं तावन्न श्रूयते । तदर्थमेव च कविकुलगुरुश्री**कालिदास-भवभूति-बाणभट्ट**प्रभृतिभिः कविमण्डलाग्रेसरै **रघुवंश-कुमारसंभव-मालतीमाधव-कादम्बर्यादीनि** सपदि रसिकजनमनोविनोदजनकानि संस्कृतभाषाव्युत्पित्सुजनानां सद्यः सम्यक्तया तद्व्युत्पत्तिसंपादकानि च गद्य-पद्यप्रचुराणि काव्यादीनि विरचितानि जाग्रत्येव । एतादृशकाव्यस्यैव च लक्षणादिपरिज्ञानार्थं तदवान्तरव्यङ्ग्य-ध्वनि-रस-दोष-गुणालंकारादिप्रतिपादनार्थं च तत्रभवद्भि**र्मम्मटा**दिभिः **काव्यप्रकाशा**दयो ग्रन्था विरचितास्तत्र च "तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि" इत्यादि काव्यलक्षणं च निर्दिष्टम् । ( अत्र तच्छब्देन काव्यं ज्ञेयम् ) कैश्चित् तु "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इत्याद्येव लक्षणमुक्तम् । कथमप्यस्तु, परं च उभयत्रापि आस्वाद्यव्यञ्जकत्वरूपलक्षणस्य विद्यमानत्वात् सहृदयहृदयाह्लादजनकं काव्यम् इति सामान्यतः संक्षिप्तलक्षणं भवितुमर्हति । तच्च केवलं पद्यप्रचुरं, गद्यप्रचुरं, गद्यपद्यमिश्रं वास्तु, सर्वमपि तत्पूर्वोक्तलक्षण एवान्तर्भवति । किंच तत् दृश्य-श्राव्यभेदात् द्विधा भिन्नं, यत्केवलं वाचन-श्रवणसमकालमेव रसिकजनानां मनसि आह्लादजननपूर्वं चमत्कारं जनयति तच्छ्राव्यम् । यच्च धीरवीरपुरुषचरितप्रचुरं विशेषतः प्रत्यक्षतयाभिनीय प्रदर्शितं सद्रसविच्चित्तमानन्दयति तद्दृश्यम् । अत एव तन्नाटकमित्यभिधीयते पूर्वोक्तं च केवलं काव्यशब्देनैव व्यवह्रियते । एतस्मिन्नपि चम्पूशब्दाभिधेय एको भेदो भवति । अस्य लक्षणं च "गद्य-पद्यात्मकं काव्यं चम्पूरित्यभिधीयते" इति प्रसिद्धम् । एतल्लक्षणसंपन्नैवेयं प्रकृता **विश्वगुणादर्शचम्पूः** प्रथते यत्संबन्धेन किंचिद्वक्तुमभिलषाम इति ।

इयं च श्रीमता तत्रभवता सुगृहीतनाम्ना **वेङ्कटाध्वरिणा** महाकविना विरचिता । अयं श्रीरामानुजमतावलम्बी भगवत्या लक्ष्म्या भक्तश्चासीत् । अयं तावत्कस्मिन् काले आविर्भूय स्वपितरावनन्दयत् तदादि प्रत्यक्षतया न प्रतीयते, किंतु अनेनास्मिन्नेव ग्रन्थे द्वितीय-तृतीयश्लोकयोः संक्षेपेण स्वकीयवृत्तं निवेदितं तस्मादयं **श्रीमदप्पय**गुरोर्नप्ता, **श्रीरघुनाथ**दीक्षितस्य च पुत्र इत्येव ज्ञायते । अयम**प्पय**-**गुरुः कुवलयानन्द-चित्रमीमांसा**दिग्रन्थकर्तुस्तत्रभवतः **अप्पयदीक्षिता**द्भिन्न इत्यवगम्यते । यतः स अप्पयदीक्षितो द्रविडजातीयः, भगवतः श्रीशिवस्य परमो भक्तः, अद्वैतमतपक्षपाती, वैष्णवमतखण्डकश्चासीदिति तद्वृत्ततः श्रूयते । किंच **व्यङ्कटपति**नामधेयस्य कस्यचिद्राज्ञः सभायां वेदान्त-धर्मशास्त्रादिविषये **ताताचार्य**मतमनेन

खण्डितम् । ततःप्रभृति ताताचार्यः अप्पयदीक्षितेन दृढतरबद्धवैर आसीत् । नै
वदेव, केनापि प्रकारेणायं हन्तव्य इत्यपि निश्चिकाय । ततश्चैकस्मिन् समये तत्र
वति दीक्षिते विपिनमार्गेण गच्छति ताताचार्येण तत्र तं हन्तुं चण्डालाः प्रेषित
परंतु तेन तपस्विना शिवभक्तिप्रभावः केवलं द्वेषपरवशतया नावगतः । तत
तस्मिन्नरण्ये कश्चिद्वीरपुरुषः सहसाऽऽविर्भूय तेन चण्डालाः परिभूताः इत्यादि । अ
नामैतत् । अत्रत्योऽयं **अप्पयगुरु**स्तु ताताचार्यस्य भागिनेयः इति निश्चीयते । ता
चार्यस्तु कर्नाटदेशीयस्य **कृष्णरायाख्य**स्य राज्ञो गुरुः, परोपकाररतश्चासीत् । अ
'**सात्विकब्रह्मविद्याविलासः**' इति प्रसिद्धो वेदान्तशास्त्रग्रन्थो व्यर
इत्यपि श्रूयते ।

अत्र ( मुम्बय्याम् ) कर्नाटकनाम्नि मुद्रणयन्त्रालये मुद्रितपुस्तके आङ्ग्लभाषाम
प्रस्तावनायामस्य विश्वगुणादर्शकर्तुर्वृत्तं दृश्यते तदित्थम्—

'अयं विश्वगुणादर्शकर्ता **वेङ्कटाध्वरि**नामा कविः **नीलकण्ठदीक्षित**समका
तत्सहाध्यायी चासीत्' इति । ततश्चैवं प्रतिपद्यते— नीलकण्ठदीक्षितः अप्पयदीक्षित
पौत्रः **नारायणदीक्षित**स्य च पुत्रः आसीत् इति **काव्यमाला**ख्यमासिकपु
कस्य प्रथमगुच्छान्तर्गतश्रीमदप्पयदीक्षितप्रणीतवैराग्यशतकाव्यग्रन्थस्य प्रथमश्लोकटि
प्पण्यां दृश्यते । अनेन **नीलकण्ठचम्पू** रचिता, तत्प्रारम्भे स्वकीयग्रन्थनिर्मा
णकालश्चापि निर्दिष्टः— 'अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु । ( ४७३८
कलिवर्षेषु गतेषु प्रथितः किल **नीलकण्ठविजयो**ऽयम् ॥' इति । तस्मा
निश्चीयते, ४७३८ तमे वर्षे ख्रिस्ताब्दं १६३७ तमं तस्मिन्नेव वर्षे नीलकण्ठचम्पूर्वि
चिता, तत्समकालीनश्चायं वेङ्कटाध्वरिनामा कविरासीत्, ततश्च २६२ वत्सरेभ्यः प्र
अयं विश्वगुणादर्शकर्ता कविः सुप्रसिद्ध आसीत् इति । परं च तेनायं ग्रन्थः कस्मिन् व
निर्मित इति तु न याथार्थ्येन निश्चेतुं शक्यते, केवलं २६० वर्षेभ्यः प्राक्तनकालीनोऽ
ग्रन्थ इत्यनुमीयते । अन्यदप्यत्रत्यमुद्रितपुस्तकप्रस्तावनायाः किंचिद्वृत्तमुपलभ्यते—

'अयं वेङ्कटाध्वरी **काञ्ची**पुरसमीपे 'अर्शनफल'नाम्नि अग्रहारे प्रतिवसि
स्म । 'वडघले' इत्याख्यवैष्णवसंप्रदायपक्षपातिताताचार्यान्वयोत्पन्नश्चासीत्
इति । अथ उपरि 'वडघले' इत्याख्यो वैष्णसंप्रदाय उक्तः तत एव अन्यसंप्रदा
सत्वस्याकाङ्क्षा उत्पद्यते, तत्परिपूरणार्थमन्यमतस्यापि निरूपणं यत्किंचिदपि प्रसङ्गादा
तितं, ततश्चैतत्पथप्रवर्तकस्य **रामानुज**स्वामिनोऽपि किंचिच्चरित्रलेखनं प्रसङ्गं नाति
क्रामति । तच्च रामानुजीयं वृत्तं पुस्तकद्वये द्विधा श्रूयते । तत्र महाराष्ट्रभाषा
कविचरित्राभिधमेकं पुस्तकं सुप्रसिद्धं विद्यते तस्मिन्नेवमस्य वृत्तान्तः—

'अयं रामानुजाचार्यः श्रीमच्छंकरमतप्रतिपक्षी शालिवाहनशकस्य ११ तमे शत
दोरासमुद्र' इत्याख्यनगरस्याधिपतौ '**बेट्टावर्धन**'नाम्नि राज्ञि महीं शासि
'श्रीपेनुमुतूर'नाम्नि ग्रामे श्रीकेशवाचार्यपत्न्यां **कान्तिमन्त्या**माविर्बभौ । अयं
ग्रामः चन्नपट्टण ( मद्रास ) पुराद्द्वादशक्रोशेषु काञ्चीनाम्ना भाषायां 'कंजेवरम्' इ
नाम्ना वा यत्प्रसिद्धं नगरं विद्यते तदध्वन्येव वर्तते । एतस्मिन्नेव ग्रामे उपनयनादनन्त

ीमता रामानुजेन **यादवप्रकाशा**ख्यस्वमातुलात् वेद-शास्त्रादिप्रावीण्यं संपादितम् । तश्चायं स्वकीयग्रामे एवैकं चिञ्चातरुमूलमाश्रित्यैकाग्रेण मनसा भगवन्तं श्रीराममु- ासांचक्रे, ततस्तत्प्रसादादेव जीवेश्वरयोर्भेदवादमाश्रित्य अद्वैतवादिनः श्रीशंकरस्वा- ानो मतं प्रत्याचख्यौ, लोकांश्च श्रीसीतारामपूजनं त्रिपुण्ड्रधारणादिसंप्रदायान् ग्राह- ामास । ततश्चानेकविधदेशेषु संचारमारचय्य तत्रत्यान् जनान् स्वमतमुपदिदेश । वं पर्यटन् ' दोरासमुद्र ' नगरमेत्य तत्रत्यराजकन्यायाः पिशाचबाधां न्यवर्तयत् । तः सुप्रसन्नेन राज्ञा तस्मै मूल्यवन्ति वस्त्रालंकारादीनि पारितोषिकानि दत्तानि स्वयं तस्माद्वैष्णवधर्ममङ्गीचकार । एवमयं यमदुनाचार्येण स्वस्य प्रियछात्रेण सह **तिरु- ति-जगन्नाथ-काशी-जयपुरा**दिमहाक्षेत्रेषु संचरन् तत्रस्थब्राह्मणान् वैष्णवदी- तान् संपादयामास कतिचिन्मठांश्च स्थापयामास। किंचास्य वैष्णवधर्मप्रवचनं श्रुत्वा यपुरमहाराजः अतीव ननन्द स्वपुरस्थान् जैनांश्च तैलयन्त्रे विनिष्पीड्य जघान । वमयं पर्यटन् **बदरीक्षेत्रं** गत्वा तत्रस्थनारायणं देवं च स्तुत्वा स्वदेशमाजगाम। तत्र ानेन **व्याससूत्रभाष्यं, (रामानुजभाष्यं) भगवद्गीताभाष्यं, तर्कभाष्यं** त्यादयो बहवो ग्रन्था विरचिताः। तथा चायं स्वमतस्थवैष्णवद्विजकृते एकां **धर्मसं- ताम**पि रचयामास। एवं सर्वमपि जीवितकालं भगवद्भक्त्या वेदान्तादिग्रन्थपरिशी- नेन च निर्यापितवान्। एनं सर्वेऽपि तदनुयायिनः **शेषा**वतारं मन्यन्ते, अत एव तैः ाचार्यस्य धातुमयी प्रतिकृतिरपि निर्मिता सा चाद्यावधि पूज्यतेऽपि। अस्यैकमास- 'तादरी' नाम्नि ग्रामे तेङ्गल (महाराष्ट्रभाषायां 'तिंगल') पथप्रवर्तकं वर्तते । होबलनाम्नि मठे च 'वडघले' ( भाषायां ' वडगळ ' ) इत्याख्यसंप्रदायप्रवर्तकं च यते, अन्यदप्येकमासनं ' गळता ' इत्याख्यग्रामे वर्तते । वडघले-तेङ्गलसंप्रदाय- ः कालान्तरेण मतभेदात् कलहश्चाजनि' इति ।

अत्रत्यमुद्रितपुस्तके च कल्पितोदन्तः ( दन्तकथा ) इति यद्वृत्तं निवेशितं तत्- ' ख्रिस्तशकस्य ११ तमे शतके दाक्षिणात्ये जनपदे ( दक्षिणहिन्दुस्थानाख्ये देशे ) माजिकधार्मिकाचारसंबन्धेन महती चर्चा प्रवृत्ता। तत्समय एव चन्नपट्टणराजधा- ां ( मद्रास इलाखा इति प्रसिद्धायां ) चेङ्गलपटाख्यमण्डले वर्तमानस्य 'कञ्जीवरम्' ते नगरस्य निकटवर्तिनि ' श्रीपरम्बुदरम् ' इति प्रसिद्धपुरे ख्रिस्तशकस्य १००९ मे वत्सरे श्रीरामानुजाचार्य इत्याह्वयः कश्चिद्विप्रोऽजनि । तेन वैष्णवो धर्मः प्रव- तः स्वयं च मनुजबान्धवः इत्युद्घोषितं च । ततश्च विजातीया अपि जनाः स्वध- आनीताः, स्वकीयानुयायिजनेषु च निर्घृणत्वद्योतका विधवावपनप्रवृत्तिर्निरुद्धा, मेव रीतिस्तदनुयायिष्वद्यावधि वर्तते एव । किंच तज्जनमध्यगा विधवा अपि वपनं रयितुं नैवोत्सहन्ते, किंतु 'यान्यस्माकं शिरांसि गुरोः पुरतोऽवनामितानि, तानि पितस्याग्रेऽवनामयितुं नार्हाणि' इति वदन्ति च । एवं कतिपये काले गते ति तत्प्रगल्भ्यैव हेतुभूतया तदीयः पन्था द्विधा विभिन्नः । ततः कतिपयैर्जनैः 'वड- ले ' अथवा ' उत्तरदेशीयाः ' इत्यभिधानं स्वीकृतम्। एवं चैतैर्जनैः उत्तरदेशीयाः देकाः शास्त्रीयाश्चाचाराः संमानिताः । अयं विश्वगुणादर्शप्रणेता कविः एतन्मतस्य

आसीत्। अन्ये च ये केचित् पूर्वमेव पन्थानमाश्रित्य स्थितास्ते 'तेङ्गले' अ
'दाक्षिणात्याः' इत्याख्यया प्रचख्युः। एवमयं भेदोऽद्यापि प्रचलत्येव। ततश्च '
घले' इतिमतस्थजनैर्या तेङ्गलीयानामवमानना कृता, तैः सह या च स्पर्धा प्रव
कृता, अन्ये च ये छलप्रकाराः कृतास्तेषां सर्वेषामपि स्फुटीकरणार्थमयं ग्रन्थोऽ
कविना व्यरचि' इति।

एतत्सर्वमपि वृत्तं काल्पनिकमेवेति न वक्तुं शक्यते। यतः रामानुजीयपथवि
श्रीमता वेङ्कटाध्वरिणाप्येतस्मिन् विश्वगुणादर्शे रामानुजवर्णने कृशानुभाषणे—

'हत्वा मार्गे द्विजादीनखिलमपि धनं हन्त हृत्वातिदृप्ता
दुर्वृत्तास्तस्करा ये वनगिरिनिलया ये च नीचा इहान्ये॥
कृत्वा चक्राङ्कमेषां झटिति विदधतः किंच मन्त्रोपदेशं
तद्दत्तैरेव वित्तैर्दधति तनुममी वंशपारंपरीभिः॥

किंच—जारान् चोरान् किरातान् जनपददमनान् राजपाशान्महीशान्
शिष्यान् कृत्वातिदृप्ताः श्रुतिपथविधुराः श्रोत्रियैर्ब्रह्मनिष्ठैः॥
साकं नो भुञ्जतेऽमी सकृदपि विनतिं कुर्वतेऽग्रे न तेषां
संकेतेनैव सिद्धं तदिदमविदुषां श्लाघ्यमाचार्यपुंस्त्वम्॥'

इत्यादिना तेषां दोषोद्घाटनं कृतं, सम्यक्तया तदुद्धरणं च न कृतं तस्म
निश्चीयते। तेङ्गलसंप्रदायिनां जनानां विजातीयजनानामपि मन्त्रोपदेशकरणादि न
रोचते इति च। वयं तु ग्रन्थनिर्माणे एतावदेव कारणमिति न निश्चिनुमः, किंतु
वैचित्र्यद्योतनमेव ग्रन्थनिर्माणहेतुरिति, अन्यथा इतरक्षेत्र-देवता-संप्रदायादिव
स्य निष्फलत्वप्रसङ्ग आपद्येत। किंच स्वसंप्रदायदृढीकरणार्थका अन्ये बहवो ग्र
अनेनैव विरचिता इति श्रूयते। अस्तु वा अन्यत्किमपि कारणं तत्राधिकलेख
सांप्रतम्।

अथास्य विश्वगुणादर्शग्रन्थस्य कालनिर्णायकं लिङ्गं अस्मिन्नेव ग्रन्थे दृश्यते तत

'हूणाः करुणाहीनास्तृणवत् ब्राह्मणगणं न गणयन्ति।
तेषां दोषाः पारेवाचां ये नाचरन्ति शौचमपि॥'

इत्यादि यत् हूणानां (गौरकायाङ्ग्लदेशीयानां) वर्णनम्। तस्मादनुमीयते– ख्रिस
कस्य १६४० तमे वर्षेऽयं ग्रन्थो विरचित इति। अस्मिन् रसालंकारादीनि काव्य
णानि सर्वत्र परिपूर्णत्वेन दृश्यन्ते, तथापि अर्थालंकारापेक्षया शब्दालंकारे
( अनुप्रास-यमकादिषु ) कवेरतीवादरो दृश्यते, तदनुसंधानादेव क्वचित् क्लिष्ट
सिद्धशब्दप्रयोगादयो दोषाः प्रादुर्भवन्ति। एवमपि काव्यस्य सहजमाधुर्य-प्रौढत्
गुणा न विलीयन्ते, तत एवास्य वश्यवचस्त्वं स्फुटीभवति। तथा चास्मिन् वि
णादर्शे तदभिधानानुरूपाः सर्वेऽपि विषयाः न विद्यन्ते, सतामपि विषयाणां आ मृ
समाप्तिपर्यन्तं एकैव पद्धतिर्नावलोक्यते। अस्य हि प्रथमत एवं रीतिः विश्वाव
कुतूहलौ **कृशानु-विश्वावसू** द्वौ गन्धर्वौ कल्पितौ। तन्मध्ये एकः ( कृशा
दोषैकदृक्, अपरो ( विश्वावसुः ) दृश्यवस्तुनो गुणग्रहणकौतुकी चासीत्। ततः

र्थं प्राप्तस्य वस्तुनः प्रथमं विश्वावसुः सानन्दं प्रशंसां करोति, ततस्तस्मिन्नेव कृशानु-
षारोपं करोति, पुनश्च तदारोपितं दूषणं विश्वावसुर्निराकरोति । परं तु इयं पद्धतिः
र्धाधीनचित्तत्वात् स्वाङ्गीकृतमतसमर्थननिघ्नत्वाद्वा भिन्ना । एतत् सर्वमपि मार्मिक-
चकजनैर्वाचनसमयेऽवगन्तुं शक्यमिति न तत्राधिकं लिख्यते । अयं कविर्यद्यपि
रामानुजप्रवर्तितवैष्णवपथानुगस्तथाप्यन्यसंप्रदायानामपि याथार्थ्यवेत्ता आसीदिति
निर्बाधमेव । किंचास्य काव्यस्य व्युत्पत्तावतीवोपयुक्ततया काव्यरसिकेषु बहुषु
ण्डितेषु महाकवेरस्य ग्रन्थानां च प्रख्यातिर्विद्यते। अस्य नीत्यन्योक्ति-राजवर्णनादि-
वुरा अन्ये बहवो ग्रन्थाः प्रसिद्धा इति तु प्रागुक्तमेव। तथा **लक्ष्मीसहस्रं** काव्यं,
**स्तिगिरिचम्पू**श्चेत्येतौ द्वौ ग्रन्थौ विश्वगुणादर्शसदृशावेव प्रसिद्धौ वर्तेते । तत्र
मीसहस्राख्ये काव्ये केवलं भगवत्या लक्ष्म्याः स्तुतिरेव विद्यते । अस्य ग्रन्थस्य
स्तबकाः सन्ति, सकलस्यापि काव्यस्य संहत्य १००० श्लोकाः सन्ति, ते च सर्वेऽ-
श्लेष-यमकानुप्रासादिशब्दालंकारपरिपूर्णाः अत एव सहृदयैरास्वादनीयाश्चेति
यामहे । एतस्मिन् काव्ये **करवीर**पत्तनस्थ'**बाबामहाराज**'इत्याख्यपण्डि-
विरचिता टीकाऽपि सुप्रसिद्धा वरीवर्ति । हस्तिगिरिचम्प्वां तु जगत्पित्रोर्लक्ष्मीना-
यणयोर्विवाहवर्णनं विलसति । एतस्यां टीकादिकमस्ति न वेति न विद्मः । एतद्ग्रन्थ-
र्वृत्तं किंचित्प्राक् प्रदर्शितमपि किंचिदवशिष्टमत्र लिख्यते । अयं **प्रलयकावेरी**-
म्रः कस्यचिद्राज्ञः सभायां प्रमुखः पण्डित आसीत् । अन्याप्येतत्संबन्धिनी लोक-
र्ता श्रूयते सा—अनेन **विश्वगुणादर्श**काव्यं स्तुतिनिन्दात्मकं विरचितमिति
स्य देवताप्रकोपादान्ध्यं प्राप्तं, ततश्च सः लक्ष्मीसहस्रं विरचय्य जगज्जननीं महाल-
मीमस्तौत् । ततस्तत्प्रसादात्पुनर्यथापूर्वं दृष्टिः संप्राप्ता इति ।

अस्मिन् विश्वगुणादर्शग्रन्थे **मधुरसुब्बाशास्त्रि**विरचिता **भावदर्पणा**ख्या
ख्या वर्तते। सा चात्र मुम्बापुर्यां कर्नाटकनाम्नि मुद्रणालये मुद्रिताप्यस्ति। सा कस्मिन्
ले विरचिता कुत्रत्यो वायं टीकाकारः इत्यादि न ज्ञायते। एतस्या अन्या टीका नोपल-
ते । इयं यद्यप्येका टीकाऽस्मिन् ग्रन्थे विद्यते, तथापि तस्यां श्लोकस्थसर्वेषामपि
नां विवरणं, अप्रसिद्धपदानां श्लिष्टपदानां च कोशादिनिर्देशेन स्फुटीकरणं, स्थले
लेऽलंकारलक्षणनिवेशनं, स्थलविशेषे व्याकरणनियमप्रदर्शनं चेत्यादिवैगुण्यम-
ोक्य तत्परिहारार्थं नूतनटीकाकरणे बद्धः परिकरः, तथापि तत्र यादृक्
हित्यं विद्वत्त्वं चापेक्षितं तादृगस्य संनिधौ नास्ति, तत एवायं विविधागम-
गरपारावारीणसूरीणां व्याख्यानचातुरीं नावगच्छति । किंतु केवलमुपरिनिर्दि-
विषयसमावेशविशिष्टव्याख्याकरणप्रोल्लास एव मनस्यजनि । ततश्च तत्समये
दृशविषयवत्पुस्तकसमूहमेकीकृत्यैतन्महत्साहसं कर्तुं प्रवृत्तः, परंतु परमेशानुकम्पया
थमप्यतिदुस्तरकार्यभारोऽयमवतारितः । किंचास्मिन् ग्रन्थे यत्र यत्र धर्म-
स्त्रादिरीत्या विवेचनमवश्यं प्राप्तं तत्र तत्र तद्यथामति सप्रमाणं विवेचि-
म् । तच्च विवेकिभिस्तत्तत्स्थले विलोकनीयम् । एवमस्यां टीकायां मूलस्थं प्रतिपदं
वन्मति विवेचितमिति '**पदार्थचन्द्रिका**' इत्याख्ययेयमभिधीयते । इत्यपीयं
कानां पुरतः कथमानीयेति विचारे निमग्न आसीत् । तावदेवात्रत्यप्रसिद्ध**निर्ण**-

यसागरयन्त्रालयाधिपतिभिः श्रीमद्भिस्तुकाराम जावजी इत्येतैः सादरं
द्रच प्रकाशीकरणे आश्वासितः। ततश्च मुद्रणकालीनसंशोधनकार्यमप्यस्मिन्नेव
तम्। तदा च शाके १७७४ तमे वत्सरे अत्र ज्ञानदर्पणनाम्नि शिलायन्त्रेऽङ्कि
पुस्तकं, शाके १८१० वत्सरे कर्नाटकनाम्नि यन्त्रालये मुद्रितं भावदर्पणव्या
हितं द्वितीयं, एतदन्यानि षट् पुरातनानि पुस्तकानि संगृह्य मुद्रितमिति तदुपोद्घ
ज्ञायते, तृतीयं चैकं हस्तलिखितपुस्तकमिति त्रीणि पुस्तकान्येकीकृत्य मुद्रि
तत्र च प्रायशः प्राचीनपुस्तकस्थानि पाठान्तराण्यादृतानि । कर्नाटकयन्त्रालये
तपुस्तकस्थपाठान्तराणि तु टीकाया अधोभागे टिप्पणीरूपेण निवेशितानि । त
स्मिन्नेव पुस्तके मूलेऽस्मत्संपादितप्राचीनपुस्तकाभ्यामनुमानतः२५।२६श्लोकाः अ
अवलोकिताः, तत्र ये तावन्मूलेनातीव विसंबद्धा इति प्रतीतास्ते टीकास्थले सूक्ष्म
निर्दिष्टाः, तत्र च मया टीकापि पृथङ्न विरचिता, ये तु मूलेन सुसंबद्धत्वेन प्रतीत
टीकां विरचय्य ते मूले एव [ ] इत्याकारकचिह्ने निवेशिताः केचित्त्यक्ता
एतच्च तत्र तत्र स्फुटीकृतम्। अन्यच्चैतत् सप्रणामं निवेदयति— टीकाकरणसमये
नसमये च कर्नाटकयन्त्रालयमुद्रितपुस्तकस्य महत्साहाय्यं सँल्लब्धम्। न ह्येता
किंतु यदि तत्पुस्तकं नालप्स्यत, तदा एतट्टीकारचनादिकार्यं निष्पन्नमभविष्यन्न
नैव निश्चीयते । किंचैतत्पुस्तके टीकायां यत्र यत्र मुद्रितपुस्तकसंबन्धेने
कृतः तत्र तत्र तदेव ( कर्नाटकयन्त्रालये मुद्रितं ) निर्दिष्टमिति ज्ञेयम् । तत
टीकायां प्रमादा भवेयुस्तर्हि ममायं नूतन एव प्रयास इत्याकलय्य 'धावतः स
न दोषाय' इति न्यायेन सदयहृदयैः कोविदाग्र्यैः क्षम्याः मह्यं निवेदनीयाश्च ।
दृष्टिदोषस्य नैसर्गिकत्वात् क्वचिदवधानाभावाद्वा यदि शोधनेऽपि क्वचित्प्र
स्युस्तर्हि तेऽपि सुधीभिः सदयं सहनीयाः मह्यं कथनीयाश्च। तेन हि द्वितीयावृत्तौ
सावधानतया सर्वेषां यथाभिप्रेतं करिष्यामीत्यभीक्ष्णं सविनयं विज्ञापयति ।
तत्रभवता 'देवस्थळी' इत्युपाभिधेन पण्डितशंकरसूनुना भालचन्द्रशर्मणा शोध
सुहृत्तया यत् साहाय्यं दत्तं तस्यापि महत उपकारान् नैव विस्मरति—

मनीषिजनचरणानुवर्त्मा
बालकृष्णशर्मा ।

श्रीर्जयति ।

## विश्वगुणादर्शनिर्दिष्टविषयसूची—

विषयाः— पृष्ठाङ्काः—

श्रीः ।

# विश्वगुणादर्शचम्पूः
## पदार्थचन्द्रिकाटीकया समेता ।

---

## उपोद्धातः १.

श्रीराजीवाक्षवक्षःस्थलनिलयरमाहस्तवास्तव्यलोल-
लीलाब्जान्निष्पतन्ती[1] मधुरमधुझरी नाभिपद्मे मुरारेः ॥
अस्तोकं लोकमात्रा द्वियुगमुखशिशोराननेष्वर्प्यमाणं
शङ्खप्रान्तेन दिव्यं पय इति विबुधैः शङ्क्यमाना पुनातु ॥ १ ॥

---

श्रीमद्ब्रह्म सनातनं श्रुतिनुतं ध्यानैकगम्यं सदा
सर्गाद्यस्य विधायकं त्रिजगतो मोदावहं यत्सदा ॥
सच्चिद्रूपतया यदर्थनिचयं व्याप्नोति तेजोमयं
भूयात्तन्निखिलाघहारि जगतामत्यन्तनिःश्रेयसे ॥ १ ॥

नमामि देवीं कुलदेवतामहं ब्रह्मादिदेवैरभिसंस्तुतां मुहुः ॥
**महादल**[2]ग्रामकृताधिवासां **महालसाख्यां** प्रकृतिं गुणात्मिकाम् ॥ २ ॥
यत्सूक्तिधारासुनिषेचनेन मद्वीलता पल्लवितापि शुष्का ॥
स्मरामि तं श्रीगुरु**वेङ्कटा**ख्यं विनम्रमूर्द्धा कृतहस्तसंपुटः ॥ ३ ॥

**श्रीगणेशं** च पितरं विद्वांसं स्वःस्थितं भजे ॥
अत्रस्थां मातरं चैव **जयन्तीं** जननप्रदाम् ॥ ४ ॥
गुरुप्रसादसंलब्धव्याकृतिज्ञानकौशलः ॥
काव्यं **विश्वगुणादर्शं** व्याकरोमि यथामति ॥ ५ ॥

अथ तत्रभवान् **श्रीवेङ्कटाध्वरि**नामा कविः प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमा-
प्तिमभिलिप्सुः शिष्टाचारप्राप्तं मङ्गलं तच्च "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मु-
खम्" इत्युक्तत्वादत्र आशीरूपमाचरन् प्राह—**श्रीराजीवेति** । सा मधुरमधुझरी
मधुरा मधुनः मकरन्दस्य धारा, अस्मान् सर्वानिति शेषः । पुनातु पवित्रीकरोतु ।
कीदृशी मधुझरी । श्रीमतो (राजीवे कमले इव अक्षिणी यस्य तस्य) राजीवा-
क्षस्य विष्णोः "बहुव्रीहौ सक्थ्यक्ष्णोः–" इत्यादिना समासान्तः षच् । वक्षःस्थले
निलय आश्लिष्य स्थितिर्यस्यास्तस्या रमाया लक्ष्म्याः "क्षीरोदतनया रमा" इत्य-

---

१ 'निःसरन्ती,' 'निःस्रवन्ती'. २ 'महाडदळ' इति महाराष्ट्रभाषायां प्रसिद्धः ।

काञ्चीमण्डलमण्डनस्य मखिनः कर्नाटभूभृद्गुरो-
स्तातार्यस्य दिगन्तकान्तयशसो यं भागिनेयं विदुः ॥

मरः । हस्ते वास्तव्यात् वर्तनात् लोलत् चलत् यत् लीलाब्जं विलासा
तस्मात् । श्रीभगवतो हृदये प्रेम्णा परिरभ्य स्थिताया लक्ष्म्याः करस्थलील
दित्यर्थः । मुरारेर्विष्णोर्नाभिपद्मे निष्पतन्ती निर्गलन्ती, पाठान्तरे तु निःस्रवन्त
माना । उत्प्रेक्षते । द्वे युगे युग्मे चत्वारीत्यर्थः । "युगं युग्मे कृतादिषु" इ
मुखानि यस्य स चासौ शिशुश्च तस्य ब्रह्मण इति यावत् । आननेषु मुखेषु
लपनं मुखम्" इत्यमरः । लोकमात्रा लक्ष्म्या कर्त्र्या "इन्दिरा लोकमाता मा" इ
शङ्खप्रान्तेन करणेन, अर्प्यमाणं प्रेम्णा समर्प्यमाणं, अस्तोकं बहुलं दिवि भवं दि
"तत्र भवः" इति यत् । पयः अमृतं, इति विबुधैः देवैः "देवास्त्रिदशा विबुधाः
इत्यमरः । शङ्क्यमाना संभाव्यमाना । मधुझरीति संबन्धः । श्रीविष्णोर्वक्षसि
षेण स्थिता लक्ष्मीः कमलं लीलया भ्रामयामास, तस्माद्गलन्ती मधुधारा भगवन्ना
प्रति संगता, तां च दृष्ट्वा लक्ष्मीः प्रेम्णा निजबालकं शङ्खाग्रेणामृतमेव पाययतीति
देवैरुत्प्रेक्षितमिति भावः । अत्र लक्ष्मीकरस्थपद्मात् स्रवन्त्यां मधुधारायां दिव
संभावनादुत्प्रेक्षालंकारः । तदुक्तम्-"संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्"
ननूत्प्रेक्षायामपि संभाव्य-संभावनयोरुपमानोपमेयभाव आवश्यकः, स चा
रेर्नाभिकमलस्य ब्रह्मण आननस्य च यद्यपि संभवति, तथापि लक्ष्मीहस्त
स्य शङ्खस्य च न संभवति । शङ्खस्यैकतो यत्किंचिन्मुकुलीभावत्वादेकतश्च
सनशीलत्वात् (शङ्खो हि उपरितनभागे प्रसृतः अधोभागे च संकुचितो वर्तते
चेत्, श्रीराजीवाक्ष इत्यस्य चन्द्रसूर्याक्ष इत्यर्थः । स यथा-" इरा भू-वाक्
स्यात्" इत्यमरात् इराशब्दस्य भूवाचकत्वं, तस्य च स्थानवाचकतापि संभव
श्रियो लक्ष्म्याः इरा स्थानं श्रीरा कमलं, तां आजीवयति विकासयतीति श्री
सूर्यः, तथैव 'इरा भू-' इत्यनेनैव कोशेन इराशब्दस्य जलवाचकत्वमपि सं
ततश्च इराया जलात् आजीवति उत्पद्यते इति इराजीवश्चन्द्रः, ततश्च श्रीरा
श्रीराजीवश्च श्रीराजीवौ चन्द्रसूर्यौ "सरूपाणामेकशेषः-" इत्येकशेषः । तौ अक्षि
स श्रीराजीवाक्षः । एवं च लक्ष्म्याः करस्थितपद्मस्य एकतश्चन्द्रकिरणसंपर्कात्
सूर्यकिरणसंपर्काच्च मुकुलितत्वं विकसनशीलत्वं च किंचित् संभवति, तेन च श
पद्मस्य चोपमानोपमेयभावः संभवतीति ज्ञेयम् । स्रग्धरा वृत्तमेतत् " भ्र
त्रयेण त्रि-मुनि-यतियुता स्रग्धरा-" इति तल्लक्षणात् ॥ १ ॥

अधुना कविः स्वकीयकाव्यरचनासामर्थ्यप्रकटनाय पूर्वजप्रशंसापूर्वकं
कोविदत्वं प्रपञ्चयंश्चिकीर्षितं ग्रन्थं प्रतिजानीते—**काञ्चीति** । काञ्चीम
काञ्चीनगरीराष्ट्रस्य मण्डनः भूषणभूतः तस्य । स्वकीयविद्वत्त्वप्रभावेण
राजधान्यां प्रसिद्धस्येति भावः । मखिनः प्रशस्तयज्ञकर्तुः । प्रशंसार्थेऽत्र
इनिः । "भूम-निन्दा-प्रशंसासु" इत्याद्युक्तेः । कर्नाटभूभृतः कर्नाटदेश

अस्तोकाध्वरकर्तुरप्पयगुरोरप्येष विद्वन्मणेः
पुत्रः **श्रीरघुनाथदीक्षितकविः** पूर्णो[1] गुणैरेधते ॥ २ ॥
तत्सुतस्तर्क-वेदान्त-तन्त्र-व्याकृतिचिन्तकः ॥
व्यक्तं **विश्वगुणादर्शं** विधत्ते **वेङ्कटाध्वरी** ॥ ३ ॥
पद्यं यद्यपि विद्यते बहु सतां हृद्यं विगद्यं न तत्
गद्यं च प्रतिपद्यते न विजहत्पद्यं बुधास्वाद्यताम् ॥

---

कृष्णरायसंज्ञकस्य "भूभृद्भूमिधरे नृपे" इत्यमरः । गुरोः वेदादेरध्या-[पक]स्य । यद्यपि "स्यान्निषेकादिकृद्गुरुः" इत्यमरात् "निषेकादीनि कर्माणि करोति यथाविधि । संभावयति चान्नेन स विप्रो गुरुरुच्यते" इति मनुस्मृ-[तेश्च] गर्भाधानादिसंस्कारकर्तुः पित्रादेरेव गुरुत्वं संभवति, तथापि तथात्रासंभवाद-[ध्याप]कस्यैव गुरुत्वं ग्रन्थकर्तुरभिप्रेतम् । अन्यथा 'कर्णाटभूभृत्पितुः' इत्येव ब्रूयात् । [तथा] चाह मनुरपि—"अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं [विद्या]त्" इति । एवं च गुरुशब्देनाध्यापकग्रहणे न दोष इत्यलमप्रस्तुतपल्लवितेन । [...]न्तेषु कान्तं मनोहरं श्राव्यमिति यावत् । यशः कीर्तिर्यस्य तस्य । तातार्यस्य [त]ाचार्यस्य । यं ( अप्पयगुरुं ) भागिनेयं भगिनीपुत्रं, भगिनीशब्दात् "स्त्रीभ्यो [ढक्]" इत्यपत्यार्थे ढक् । "स्वस्रीयो भागिनेयः स्यात्" इत्यमरः । विदुः जानन्ति । [...]का इति शेषः । 'विद ज्ञाने' इत्यस्माल्लट् । "विदो लटो वा" इति उस् । अस्य प्रसि-[द्धस्य] अस्तोकानां बहूनामध्वराणां ज्योतिष्टोमादियागानां "यज्ञः सवोऽध्वरो यागः" [इत्य]मरः । कर्तुः विधिवदनुष्ठातुः । विद्वत्सु पण्डितेषु मणेः श्रेष्ठस्य, अप्पयगुरोः [अप्प]यदीक्षितस्य, एष प्रसिद्धः पुत्रः श्रीरघुनाथदीक्षिताख्यः कविः, गुणैः सौशील्या-[दिभि]ः पूर्णः सन् एधते वर्धते । शार्दूलविक्रीडितं वृत्तम् । "सूर्याश्वैर्म-स-जास्त-ताः [सगु]रवः शार्दूलविक्रीडितम्" इति तल्लक्षणात् ॥ २ ॥

**तत्सुत इति**। तस्य रघुनाथदीक्षितस्य सुतः पुत्रः, तर्कश्च वेदान्तश्च तन्त्रं मीमांसा [च] व्याकृतिर्व्याकरणं च तेषां चिन्तको विवेचकः ज्ञातेत्यर्थः । **वेङ्कटाध्वरी** एतन्नामा [क]विः **विश्वगुणादर्शं** विश्वस्य जगतो गुणा आदृश्यन्तेऽस्मिन्निति तथाभूतं 'दृशिर् [प्रेक्]षणे' इत्यस्मादाङ्पूर्वकादधिकरणे घञ् । अथवा विश्वगुणानामादर्श इति विग्रहः । [अस्मिन्]ति पक्षे तु "पुंसि संज्ञायां घः प्रायेण" इति घः । एवमन्वर्थनामकं चम्पूग्रन्थं, व्यक्तं [प्र]सिद्धं यथा स्यात्तथा विधत्ते करोति । 'डुधाञ् धारण-पोषणयोः । इत्यस्माद्धातो-[र्ल]ट् । वृत्तमनुष्टुप् "पञ्चमं लघु सर्वत्र" इत्यादितल्लक्षणात् ॥ ३ ॥

अथ कविः स्वचिकीर्षितप्रबन्धस्येतरप्रबन्धविलक्षणतामाह—**पद्यमिति**। (लोके) [यद्य]पि पद्यं केवलं श्लोकरूपं काव्यं रघुवंश-कुमारसंभव-माघ-किरातार्जुनीयादिकं, तच्च [हृद्]यं मनोहारि विद्यते, तथापि तत् विगद्यं गद्यरहितं ( अस्ति तस्मात् ) सतां बहु

---

१ 'पूर्णैर्गुणै'.

आदत्ते[1] हि तयोः प्रयोग उभयोरामोदभूमोदयम्
सङ्गः कस्य हि न स्वदेत? मनसे माध्वीक-मृद्वीकयोः ॥
विश्वावलोकस्पृहया कदाचिद्विमानमारुह्य समानवेषम्[2] ॥
**कृशानु-विश्वावसुनामधेयं** गन्धर्वयुग्मं गगने चचार ॥
तत्र[3]—
**कृशानुरकृशासूयः** पुरोभागिपदं गतः ॥

---

अतिमनोहरं रसिकानां यथेप्सितमनोहरमित्यर्थः । न भवति । तर्हि कर्तव्यमित्याह । गद्यं च गद्यमपि (तत्तु कादम्बर्यादिकं) पद्यं विजहत् प (विद्यते, तस्मात्तदपि ) 'ओहाक् त्यागे' इत्यस्मात् शतृप्रत्ययः । उभयोरपि मर्मज्ञपण्डितानां, आस्वाद्यतां रुच्यर्हतां न प्रतिपद्यते न प्राप्नोति किंविधमिष्टं स्यादित्याकाङ्क्षायामाह—**आदत्ते इति** । हि यस्मात् कारणात् त द्ययोरुभयोः प्रयोगः प्रकृष्टो योगः अस्ति यस्मिन् सः, अत्र अर्शादित्वात् मत्वर्थ तादृशश्चम्पूप्रबन्धः । "गद्य-पद्यात्मकं काव्यं चम्पूरित्यभिधीयते" इति व आमोदस्यानन्दस्य "मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोद-संमदाः" इत्यमरः अतिशयस्योदयमुत्पत्तिं विधत्ते करोति । हि यतः माध्वीकं मधु च "मधु मा द्वयोः" इत्यमरः । मृद्वीका द्राक्षा च "मृद्वीका गोस्तनी द्राक्षा" इत्यमरः सङ्गः एकत्र योगः । कस्य मनसे न स्वदेत कस्य मनसि रुचिं नोत्पादयेत्? सर्वस्मै रोचेतेत्यर्थः । 'ष्वद आस्वादने' इत्यस्य विधिलिङि रूपम् । इत्यत्र च "रुच्यर्थानां प्रीयमाणः" इति चतुर्थी । अर्थान्तरन्यासोऽत्राल विशेषेण सामान्यस्य समर्थनात् । तदुक्तम्—"सामान्यं वा विशेषो वा तदन्ये र्थ्यते । यत्र सोऽर्थान्तरन्यासः" इति । वृत्तं शार्दूलविक्रीडितम् । लक्ष (२ श्लोकटीकायां) कथितम् ॥ ४ ॥

संप्रति कविः स्वकाव्ये वर्णनीयकथाप्रस्तावमाह—**विश्वावलोकेति** । विश्वस्य जगतोऽवलोकश्चमत्कारप्रेक्षणं तस्य स्पृहया इच्छया "इच्छा काङ्क्षा तृट्" इत्यमरः । समानस्तुल्यो वेष आकारो यस्य तत्, **कृशानु**रिति **विश्वाव** च नामधेये नामनी यस्य "नामधेयं च नाम च" इत्यमरः । तत् गन्धर्वयो गन्धर्वावित्यर्थः । विमानं व्योमयानं "व्योमयानं विमानोऽस्त्री" इत्यमरः । अ मयानद्वयमित्यवधेयम् । आरोहणकर्तृद्वयत्वात् । आरुह्याधिरुह्य, गगने आकाश नमनन्तं" इत्यतः "पुंस्याकाश-विहायसी" इत्यन्त अमरः । चचार । उपजा "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति तल्लक्षणात् ।

द्वयोर्गन्धर्वयोरवस्थाविशेषमाह—**तत्रेति** । तत्र द्वयोर्मध्ये इत्यर्थः । कृ **रिति** । कृशानुः कृशानुनामा गन्धर्वः । अकृशा बहुला असूया गुणेषु सत्स

---

१ 'आधत्ते'. २ 'रूपम्'. ३ 'तत्र तु'.

विश्वावसुरभूद्विश्वगुणग्रहणकौतुकी ॥ ६ ॥

## अथ सूर्यवर्णनम् २.

अथ पुरतः समापतन्तमरविन्दबान्धवमवलोकयन्नवन्दे[1]तागमसागरे[2]पार-
। **विश्वावसुः।**

**विश्वावसुः**—ब्रह्मचर्यव्रतोत्सर्गगुरवे कोकसन्ततेः ॥
छायावि[3]ब्बोकलोलाय छान्दसज्योतिषे नमः ॥ ७ ॥

ष्करणं "अक्षान्तिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपि" इत्यमरः। यस्य तथा- सन्, पुरोभागिनः दोषैकदृशः "दोषैकदृक् पुरोभागी" इत्यमरः । पदं स्थानं दं व्यवसित-त्राण-स्थान-लक्ष्माङ्घ्रि-वस्तुषु" इत्यमरः । गतः प्राप्तः अभूत् । अनेन तो गुणग्राहित्वेऽपि गुणदार्ढ्यार्थमेव बहिर्दृश्यमानं पुरोभागित्वं नटवत्स्वीकृतमिति तम्। "दार्ढ्याय गुणसमृद्धेः" इत्येतद्ग्रन्थान्ते तेनैवोक्तत्वात्। विश्वं वसु धनं यस्येति विधः "वसू रत्ने धने वसु" इत्यमरः । विश्वावसुस्तु "विश्वस्य वसुराटोः" इत्य- विश्वशब्दस्य दीर्घः। विश्वस्य गुणानां ग्रहणे वर्णने कौतुकं यस्य तथाभूतः। कौतुकी- मत्वर्थीय इनिः । अभूत् आसीत् । अनेन तेनात्मनाम अन्वर्थकं कृतमिति ध्वनि- । वृत्तमनुष्टुप् । लक्षणं पूर्वं ( ३ श्लो० टीकायाम् ) उक्तम् ॥ ६ ॥

'पुरोभागिपदं गतः" "विश्वगुणग्रहणकौतुकी" इत्यनेनास्मिन्काव्ये प्राधान्यतया गुण-दोषवर्णनमेव विषय इति द्योतितं, तत्र प्रथमतः माङ्गल्यतया च "आदित्या- ते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः "अथादित्य उदयन् यत्प्राचीं दिशं शति तेन प्राच्यान्प्राणान् रश्मिषु संनिधत्ते यद्दक्षिणां यत्प्रतीचीं यदधो यदूर्ध्वं तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु संनिधत्ते" इति श्रुतेश्च प्राणभूतत्वेन च सूर्यवर्णनमेवोचितमिति द्योतयन्प्रस्तौति—**अथेति**। अथ द्वाभ्यां शानु-विश्वावसुभ्यां ) यथायथं स्वानुरूपस्थानस्वीकारानन्तरं, पुरतोऽग्रतः समा- तमुदयमानं अरविन्दबान्धवं सूर्यमवलोकयन्, आगमानां वेदानां सागरस्य पार- दृष्टवान् इति तथाभूतः। सकलवेदार्थज्ञातेत्यर्थः। दृश्वेत्यत्र "दृशेः क्वनिप्" इति प् प्रत्ययः । विश्वावसुः अवन्दत सूर्यं नमश्चकार।

देवाह—**ब्रह्मचर्येति** । कोकानां चक्रवाकानां "कोकश्चक्रश्चक्रवाकः" रः । संततेः समुदायस्य, ब्रह्मचर्यव्रतस्य मैथुनाभावस्य उत्सर्गस्त्यागः न् कर्मणि गुरवे आचार्याय । चक्रवाकानां निशि विरहावस्थासत्त्वात् सुरतावसरप्रदायकायेत्यर्थः । छायया सूर्यप्रियया "छाया सूर्यप्रिया तः" इत्यमरः । यो विब्बोको विलासः "स्त्रीणां विलास-विब्बोक-"

---

१ 'अवन्दतैनम्'. २ 'आगमसार'. ३ 'बिम्बैक'.

**कृशानुः**–अरे[1] सकलभुवनसंशोषकारिणं[2] तपनमपि[3] किं नमनक
करोषि? ॥ १ ॥ पश्य—
पान्थान् दीनानहह वसुमानातपान्धान् विधत्ते
शुष्कां पृथ्वीं रचयतितरां शोषयत्योषधीश्च ॥

---

इत्यमरः। तस्मिन् लोलाय सतृष्णाय सोत्सुकायेति यावत्। "लोलश्चल-सतृष्ण
इत्यमरः। छान्दसं छन्दसि भवं वेदप्रतिपाद्यमिति यावत् 'तत्र भवः' इति
र्थेऽण्। ज्योतिस्तेजो यस्य सः तस्मै। तथाच श्रुतिः-"विश्वरूपं हरिणं जा
परायणं ज्योतिरेकं तपन्तम्। सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुद
सूर्यः" इति। श्रुत्यर्थस्तु–'विश्वरूपं सर्वरूपं हरिणं किरणवन्तं, जातं वेदो ज्ञानं
तज्जातवेदसं जातप्रज्ञमित्यर्थः। परायणं परं उत्तमं (प्राणानां) आश्रयभूतम्
चक्षुर्भूतं ज्योतिस्तेजोरूपं तपन्तं तापक्रियया वर्तमानम्। ब्रह्मविदो विदुरिति
कोऽसौ यं विदुः तदाह–सहस्ररश्मिरिति। इत्यादि स्पष्टम्।' अथवा छान्दसं
वितुर्वरेण्यं" इति गायत्रीच्छन्दःप्रतिपाद्यं ज्योतिर्यस्य तथाभूतः। तथा चाय
'यः सूर्यो नः सर्वेषामस्माकं धियो बुद्धीः प्रेरयति, तस्य जगदुत्पादकस्य सवितु
प्रसिद्धं वरेण्यं श्रेष्ठं भर्गस्तेजो वयं धीमहि ध्यायेमेत्यर्थः' इति। तादृशाय
नमः नमस्करोमीति यावत्। वृत्तमनुष्टुप्॥ ७॥

सूर्यं वर्णयन्तं विश्वावसुं दृष्ट्वा जगत्संतापकारित्वं तद्दोषमुद्भाव्याह कृशानु
इति। अरे भो विश्वावसो, सकलभुवनानां संशोषणं करोतीति तथाभूतं "
जातौ–" इति ताच्छील्ये णिनिः। अत एव तपनं तप्यते अनेन जगदिति तं,
णाधिकरणयोश्च" इति ल्युट्। तापरूपमपि सूर्यमित्यर्थः। किं कथं नमनक्रि
कर्मरूपं करोषि। तं नमस्करोषीत्यर्थः। अभूततद्भावे च्विः। तस्मिंस्तापकारि
सत्त्वात् नमनमयुक्तमिति भावः॥ १॥ तदेवाह–**पश्येति**।

**पान्थानिति**। अयं वसुमान् वसवः किरणाः विद्यन्ते अस्येति विग्र
"तदस्त्यस्या–" इति मतुप्। किरणवान् सूर्य इत्यर्थः। "रश्मौ
रत्ने धने वसु" इत्यमरः। दीनान् अध्वगमनखिन्नान् पान्थान् पथिकान् "
पथिक इत्यपि" इत्यमरः। आतपान्धान् आतपेन प्रकाशेन "प्रकाशो द्योत
पः" इत्यमरः। अन्धान् दृष्टिहीनान् विधत्ते करोति। अहह इति खेदे। ए
कष्टमित्यर्थः। दीनान् पान्थान् इत्यनेन दीनानामेव क्लेशाधिक्यं सूचितं, ये
दीनाः संपत्तिमन्तः, ते तु छत्र-शकटादिसाधनैरातपं दूरीकर्तुं शक्नुवन्ति।
दीनानां क्लेशदायित्वं महतामयुक्तमिति भावः। तथा पृथ्वीं शुष्कां जलहीनां "शुषे
इति क्तप्रत्ययार्थे कः। रचयतितरां अतिशयेन करोति। रचयति इत्यस्मात्
शयार्थे 'तिङश्च' इत्यनेन तरप्, तदन्ताच्च "किमेत्तिङव्यय–" इत्यादिना अ

---

१ 'सखे कथं'. २ 'भुवनशोषकारिणं'. ३ 'तपनमपि नमनक०'.

कासाराणां हरति विभवं क्लान्तिशान्तिप्रदानाम्[1]

क्रूरस्यैवं गुणलवकथा का ? स्वतो भास्वतोऽस्य ॥ ८ ॥

विश्वावसुः—किमरे भगवन्तमरविन्दबान्धवमपि विनिन्दसि[2] ? शृणु

भागिन् ॥ २ ॥

वृष्टिं वृष्टिभिरारचय्य जगतस्तुष्टिं सरीसर्ष्टि यः

पुष्टिं द्राग् विशिनष्टि दृष्टिषु नृणां ध्वान्तं पिनष्टि स्थिरम् ॥

प्राज्ञानामपवर्गमार्गदममुं पद्मागृहोल्लासिनं

को न स्तौति ? समस्तलोकसुहृदं द्योभूषणं पूषणम् ॥ ९ ॥

---

धीः फलपाकानन्तरं नाशवन्तो व्रीहि-यवादयः "ओषध्यः फलपाकान्ताः" इत्यमरः। पि—"ओषध्यः फलपाकान्ता बहुपुष्प-फलोपगाः" इत्याह । शोषयति सत्त्वहीनाः ते च । ननु पान्थानां पथि जलपानप्राप्तेः क्लेशः सुपरिहर इत्याशङ्क्य, तदपि मित्याह—**कासाराणामिति** । क्लान्तिशान्तिप्रदानां श्रमशान्तिकराणां प्रदद- ति प्रदाः क्लान्तेः शान्तिप्रदास्तेषामिति विग्रहः "आतोऽनुपसर्गे—" इति कः। कासा- सरोवराणां "कासारः सरसी सरः" इत्यमरः । विभवं जलरूपमैश्वर्यं हरति यति । एवं च दीनानां पथि जलपानमात्रं साधनमपि विनाशयतीति भावः । त्थं स्वभावतः क्रूरस्य निर्दयस्य, अस्य पुरतो दृश्यमानस्य भास्वतः सूर्यस्य स्वद्विवस्वत्सप्ताश्व—" इत्यमरः । गुणानां सद्गुणानां लवस्य लेशस्यापि "लव-ले- गाणवः" इत्यमरः । कथा वार्ता का ? अपि तु नास्तीत्यर्थः । अत्र 'पान्थान् न् आतपान्धान् विधत्ते' इत्यादिवाक्यं क्रूरत्वस्य हेतुरूपं, तस्मात् काव्यलिङ्ग- रः "-काव्यलिङ्गं हेतोर्वाक्यपदार्थता" इति तल्लक्षणात् । मन्दाक्रान्ता वृत्तम् । दाक्रान्ता जलधि-षडगैर्म्भौ न-तौ ताद्गुरू चेत्" इति तल्लक्षणात् ॥ ८ ॥

वं तद्वचनं श्रुत्वा न भवता सम्यग्विचारितमित्यभिप्रेत्य सतिरस्कारमाह विश्वा- **-किमरे** इति । अरे कृशानो, भगं तेजोऽस्यास्तीति भगवान् "ऐश्वर्यस्य सम- तेजसो यशसः श्रियः । ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीङ्गना" इति । तं, न तेजोयुक्तमेव, अपि तु अरविन्दबान्धवं अरविन्दानां कमलानां विकासकरणात् दृशं, एतादृशमपि सूर्यं निन्दसि ? अत एव हे पुरोभागिन् दोषैकदृष्टे, शृणु ाय एतद्वक्ष्यमाणमिति शेषः ॥ २ ॥

समाकर्णयेत्याह—**वृष्टिमिति** । यः सूर्यः घृष्टिभिः किरणैः "घृष्टिर्वराहे रश्मौ च ुंस्यौषधौ स्त्रियाम्" इति शब्दरत्नमञ्जूषायाम् । वृष्टिं वर्षणं आरचय्य कृत्वा, प्रतियत्ने' इत्यस्माण्णिजन्ताल्ल्यप् "ल्यपि लघुपूर्वात्" इति णेरयादेशः । सर्वतः ान् प्रसार्येति यावत् । जगतः तुष्टिं तोषं सरीसर्ष्टि अतिशयेनोत्पादयति ' सृज

---

[1] 'क्लान्त'. [2] 'विनिन्दयसि'.

यदा न पश्यन्ति तमोविमर्दिनं रविं जनास्तत् कथयन्ति दुर्दिनम्।
धिनोति चाम्भोजततिं सरोगतां धुनोत्यसौ देहभृतां सरोगताम्॥

---

विसर्गे' इत्यस्माद्यङ्लुकि लटो रूपम् "रुग्रिकौ च लुकि" इत्यभ्यासस्य रीग
तथा नृणां दृष्टिषु नेत्रेषु "-नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी" इत्यमरः। द्राक्
समकालमेव "द्राक् मङ्क्षु सपदि द्रुते" इत्यमरः। पुष्टिं पोषणं विशिनष्टि वि
त्पादयति 'शिष्लृ विशेषणे' इत्यस्माद्रुधादिकाल्लट्। तथा स्थिरं निखिलनिशां
स्थितं ध्वान्तमन्धकारं "अन्धकारोऽस्त्रियां ध्वान्तं" इत्यमरः। पिनष्टि चूर्णी
विनाशयतीति यावत्। 'पिष्लृ संचूर्णने' इत्यस्माल्लट्। किंच प्राज्ञानां यथ
तन्माहात्म्याभिज्ञानां पण्डितानां "धीरो मनीषी ज्ञः प्राज्ञः" इत्यमरः। अप
मोक्षस्य "मोक्षोऽपवर्गः" इत्यमरः। मार्गदं मार्गप्रदातारं, ज्ञानिनो हि सूर्य
मार्गेण मुक्तिं प्राप्नुवन्ति इति प्रसिद्धिः। तथा च श्रुतिः-"अथोत्तरेण तपसा
चर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते। एतद्वै प्राणानामायतन
मृतमभयमेतत्। परायणमेतस्मान्न पुनरावर्तन्ते" इति। "द्वाविमौ पुरुषौ
सूर्यमण्डलभेदिनौ। योगनिर्भिन्नमूर्धैकोऽपरावृत्तमृतः परः" इति स्मृतिश्च।
पद्माया लक्ष्म्या गृहाणि निवासस्थानानि कमलानि तेषामुल्लासं विकासं करोती
भूतं, ताच्छील्ये णिनिः। एतादृशगुणविशिष्टत्वादेव च समस्तानां लोकान
निरपेक्षतया हितकरं, द्योः आकाशस्य "द्यो-दिवौ द्वे स्त्रियामभ्रं" इत्यमरः
णमलंकारभूतं अमुं, एवंविशिष्टबहुसद्गुणयुक्तं, पूषणं सूर्यं "विकर्तनार्क-मार्तण्ड
रारुण-पूषणः" इत्यमरः। कः पुरुषः न स्तौति स्तुतिं न करोति? अपि तु सर्वे
वन्तीत्यर्थः। 'ष्टुञ् स्तुतौ' इत्यस्य लट्। "उतो वृद्धिः-" इत्यादिना वृद्धिः।
दृशा एव सर्वे वृथा दोषैकदर्शिन इति भावः। अत्र 'वृष्टिं घृष्टिभिः' इत्याद
साम्यात् अनुप्रासोऽलंकारः "वर्णसाम्यमनुप्रासः" इति तल्लक्षणात्। तस्यैव व
च 'को न स्तौति' इत्यस्य हेतुरूपतया काव्यलिङ्गं, एवमुभौ मिलित्वा संसृष्टिरल
तदुक्तम्-"सैषा संसृष्टिरेतेषां (अलंकाराणां) भेदेन यदिह स्थितिः" इति
लविक्रीडितं वृत्तम्। लक्षणं प्राक् (२ श्लो० टीकायां) उक्तम्॥ ९॥

किंच नैतावदेव किंतु अन्यदपि तन्महत्त्वं शृण्वित्याह-**यदेति**। जन
अन्धकारं "अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः" इत्यमरः। वि
नाशयतीति तथाभूतं रविं सूर्यं, यदा न पश्यन्ति, तदा तत् दुर्दिनं दुष्टदिनं कथ
यदा मेघाच्छादनात् सूर्यस्यादर्शनं भवति, तदा लोकास्तद्दुर्दिनमिति वदन्तीति
तदुक्तममरे-"मेघच्छन्नेऽह्नि दुर्दिनम्" इति। अपि च असौ सूर्यः सरसि
"कासारः सरसी सरः" इत्यमरः। गता स्थिता सरोगता तां, अम्भोजानां क
ततिं समुदायं धिनोति प्रीणयति विकासयतीति यावत् 'धिवि प्रीणने' इ
स्वादिकात् लट्। तथा देहं बिभ्रति धारयन्ति ते देहभृतः प्राणिनस्तेषां
सहिताः सरोगास्तेषां भावः सरोगता तां, धुनोति नाशयति 'धूञ् कम्पने'

आशापालेषु पाशायुध-यम-बलभिन्मारुतेशादिकेषु
प्रायो भूयस्तु जाग्रत्स्वपि च शुचितया भासुरा भूसुराद्याः ॥
स्मै कालत्रयेऽपि प्रतिदिवसममी कुर्वतेऽर्घ्यप्रदानम्
सैषा त्रय्येव विद्या तपति रविमयी सर्वलोकान् पुनाना ॥ ११ ॥

---

। "आरोग्यं भास्करादिच्छेत्" इत्याद्यागमात्सूर्यस्यैव रोगनाशकरत्वं प्रसिद्धम् ।
प्रतिपादान्ते समानवर्णानां पुनः पुनः श्रवणात् यमकालंकारः । "अर्थे सत्यर्थ-
नां वर्णानां सा पुनः श्रुतिः । यमकं पाद-तद्भागवृत्ति-" इत्यादितल्लक्षणात् । वंश-
म् । "ज-तौ तु वंशस्थमुदीरितं ज-रौ" इति तल्लक्षणात् ॥ १० ॥

च **आशापालेष्विति** । अमी शुचितया अन्तःकरणशुद्ध्या भासुरा दीप्ति-
'भासृ दीप्तौ' इत्यस्मात् 'भञ्ज-भास-मिदो घुरच्' इति घुरच् प्रत्ययः । भूसुरा
आद्याः येषु ते । ब्राह्मण-क्षत्रिय-वैश्या इत्यर्थः । पाशायुधो वरुणश्च "प्रचेता
पाशी" इत्यमरः । यमश्च बलं बलनामानमसुरं भिनत्तीति बलभिदिन्द्रश्च अत
र तस्य बलारातित्वमुक्तम् "बलारातिः शचीपतिः" इति । "अन्येभ्योऽपि
ते" इति क्विप् । मारुतो वायुश्च "समीर-मारुत-मरुत्–" इत्यमरः । ईश ईश्वरश्च
ो येषां अग्नि-सूर्य-निर्ऋति-सोमानां तेषु पाशायुध-यम-बलभिन्मारुतेशादिकेषु ।
बहुषु अष्टस्वित्यर्थः । आशाः दिशः "दिशस्तु ककुभः काष्ठा आशाश्च" इत्य-
पालयन्ति रक्षन्तीति आशापालास्तेषु दिक्पालकेषु, जाग्रत्सु स्वस्वाधिकारतत्प-
त्स्वपि । 'जागृ निद्राक्षये' इत्यस्मात् शतृप्रत्ययः । "नाभ्यस्ताच्छतुः" इति
वः । "जक्षित्यादयः षट्" इत्यभ्यस्तसंज्ञा च । यस्मै सूर्यायैव प्रतिदिवसं काल-
पि प्रातर्मध्याह्ने सायं चेति त्रिकालमित्यर्थः । प्रायः अर्घ्यस्य प्रदानमर्पणं कुर्वते
त । 'डुकृञ् करणे' इत्यस्माद्वर्तमाने लट् । 'अत उत्सार्वधातुके' इति गुणो-
कारादेशः । "आत्मनेपदेष्वनतः" इति झस्यादादेशः । केचिज्जनाः सूर्यादन्यां
मपि भजन्ते, किंतु न सूर्यं विहाय, अपि तु प्रथमं संध्यावन्दनसमये सूर्यायार्घ्यं
व भजन्ते, इति 'प्रायः' इत्यनेन सूचितम् । संध्यावन्दनमन्तरान्यस्मिन् कस्मि-
कर्मण्यनधिकारात् । अर्घ्यप्रदानं हि गायत्रीमन्त्रेण विहितं, स च मन्त्रो वेद-
द्धृतः अत एव तस्य त्रिपादत्वं, तदुक्तं मनुना-"त्रिभ्य एव तु वेदेभ्यः पादं
दुदुहत् ।" इति । यस्मादेवं तस्माद्भगवान् सूर्यो वेदत्रयीरूप एवेति संभाव्याह-
**ति** । सा एषा मूर्तिमती रविमयी सूर्यरूपा, सर्वलोकान् पुनाना पवित्रयन्ती सती
पवने' इत्यस्मात् शानच् । त्रयी वेदत्रयीरूपा विद्यैव "स्त्रियामृक्साम-यजुषी
दास्त्रयस्त्रयी" इत्यमरः । तपति प्रकाशते । अत्र सूर्ये वेदत्रयारोपात् उत्प्रेक्षालं-
स्रग्धरा वृत्तम् । अस्य द्वयस्यापि लक्षणं प्राक् (प्र. १ श्लोकटीकायां) उक्तम् ॥ ११ ॥

कृतत्रिदशपोषणं कृशरथाङ्गसंतोषणं
पिशाचकुलभीषणं पृथुतमश्छटापेषणम् ॥
विनम्रगदशोषणं विहितवारिजोन्मेषणं
नमस्कुरुत पूषणं ननु नभःस्थलीभूषणम् ॥ १२

इत्थं **विश्वावसु**र्विभावसुमभिष्टुवन् प्राञ्जलिः **कृशानु**ना स
शात्मानं समया गमयामास विमानम् । आनमच्च तद्बिम्बमध्यध
तिमानमहिमानं परमात्मानम् ।

---

अथेदानीं सामान्यतः सूर्यवर्णनमुपसंहरन् एवंविधमहिमवते भगवते तस
स्काराचरणमेव श्रेय इत्यभिप्रयन्नाह—**कृतेति** । कृतं त्रिदशानां देवान
येन तं, "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिश्रुतिभिस्तावद्वसन्तादिवि
यज्ञादि कर्म विहितं, तस्मिन् कर्मणि समर्पितहविर्द्वारा देवानां पोषणं
तत्कालनिर्माणं च सर्वथा सूर्याधीनं, तस्मात् देवतानां पोषणमपि सूर्याय
भावः । कृशाः निशि विरहेणेति शेषः । खिन्नाः ये रथाङ्गाश्चक्रवाकाः तेषां
मानन्दजनकं "कोकश्चक्रश्चक्रवाको रथाङ्गाव्हयनामकाः" इत्यमरः । तथा पि
कुलस्य समुदायस्य भीषणं भयोत्पादकम् । पिशाचानामह्नि संचाराभावो हि
तथा पृथुतमश्छटापेषणं तमसः छटा तमश्छटा पृथ्वी महती या तमश्छटा अ
समुदायः निबिडान्धकार इति यावत् । तस्याः पेषणं नाशकम् । तथा वि
अनन्यभक्त्या शरणागतानां गदस्य रोगस्य "रोग-व्याधि-गदामयाः" इत्यमरः
निवारकम् । विहितं कृतं वारिजानां कमलानां उन्मेषणं विकसनं येन तथाभूत
नभः आकाश एव स्थली अकृत्रिमस्थलं "जानपद-कुण्ड-गोण-स्थल-" इ
स्थलशब्दात् अकृत्रिमार्थे ङीष् । तस्याः भूषणमलंकारभूतं, एतादृशं पूषणं
श्रीसूर्यं, ननु निश्चयेन नमस्कुरुत । यूयं सर्वे जना इति शेषः । अत्र 'कृतत्रिदश
इत्यादिवाक्यस्य नमस्करणहेतुत्वात् काव्यलिङ्गमलंकारः । पृथ्वी वृत्तम् " द्विती
कुन्तले गुरुषडष्टमद्वादशं चतुर्दशमथ प्रिये गुरुगभीरनाभिह्रदे । सपञ्चदशमन्ति
यत्र कान्ते यतिर्गिरीन्द्र-फणभृत्कुलैर्भवति विद्धि पृथ्वीति सा" इति तल्लक्षणात

इत्थं सामान्यतः सूर्यं वर्णयित्वा तद्गतविशेषधर्मानुवर्णनार्थं प्रस्तौति कविः
**विश्वावसु**रित्यादिना । इत्थमुक्तप्रकारेण, विश्वावसुः प्राञ्जलिः कृताञ्जलि
विभावसुं सूर्यं " चित्रभानुर्विभावसुः " इत्यमरः । अभिष्टुवन् तस्य स्तुतिं
सन्, कृशानुना सह । अत्र "सहयोगेऽप्रधाने" इत्यनेन तृतीया । तेन च
विश्वावसोरेव प्राधान्यं सूचितं, अत एव अप्राधान्यात् कृशानुशब्दात् तृतीया ।
आत्मानो मासभेदेन अवयवा यस्य स तं, समया सूर्यस्य समीपमित्यर्थः । "द्वाद
दिवाकरः " इत्यमरः । अत्र " अभितः-परितः-समया-निकषा-हा-प्रतियोगेऽ

---

१ 'कृत'.

प्रशस्तगुणसिन्धवे प्रपदनस्पृशां बन्धवे
स्वतोऽपहतपाप्मने सकलदेहिनामात्मने ॥
नमः कमलवासिनीनयनसौख्यसंदायिने
तमःशमविधायिने तरणिमण्डलस्थायिने ॥ १३ ॥

द्वितीया। सूर्यस्य मासभेदेन द्वादशावयवत्वं " पञ्चपादं पितरं द्वादशाकृतिं " इति
गनिषदि भाष्ये श्रीमच्छंकराचार्यैः प्रतिपादितम्– ' द्वादशाकृतिं द्वादश मासा
योऽवयवा आकारणं वा अवयविकरणमस्य ' इति । विमानं गमयामास
मास । गमयित्वा च किं कृतवांस्तदाह–**आनमच्चेति**। तस्य सूर्यस्य बिम्बमध्ये
ऽमध्ये धाम स्थानं यस्य तम् । अतिमानः मानं प्रमाणं अतिक्रान्तः महिमा
म्यं यस्य स तं परमात्मानं श्रीनारायणरूपं आनमच्च नमस्कृतवान् । नाराय-
सूर्यमण्डले स्थितत्वं " ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः " इत्याद्या-
सिद्धम् ॥

न्दनप्रकारमेवाह–**प्रशस्तेत्यादिना**। प्रशस्ताः स्तुत्याः ये गुणा दया-दाक्षिण्या-
भक्तारिष्टनिरसनादयो वा तेषां सिन्धुः समुद्रस्तस्मै अपारगुणवते इत्यर्थः ।
नं पादाग्रं तत् स्पृशन्तीति तेषां बन्धवे हितकारिणे । यद्यप्यमरे "पादाग्रं प्रपदं
" इति पादाग्रवाची प्रपदशब्द एवोक्तः, न तु प्रपदनशब्दस्तथापि तत्र प्रपूर्व-
' पद गतौ ' इत्यस्माद्धातोः सकाशात् " खनो घ च " इति सूत्रे घित्करणस्या-
ऽपि ज्ञापनार्थत्वात् घप्रत्ययः । अत्र तु तस्मादेव ल्युट् प्रत्ययः इयानेव भेदः ।
त्वेक एवेति ज्ञातव्यम् । पादस्पर्शनं च पूजनादौ भगवन्मूर्तेः । तदुक्तं भागवते
रो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् " इति । अथवा प्रकर्षेण पद्यते
अनेन तत् प्रपदनं ज्ञानं तत् स्पृशन्ति संपादयन्ति ते प्रपदनस्पृशो ज्ञानिनः तेषां
प्रियाय। भगवान् हि ज्ञानिनामतीव प्रियः। तथा च भगवद्गीतायाम्-"चतुर्विधा
ते मां नराः सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ। तेषां ज्ञानी
युक्त एकभक्तिर्विशिष्यते।" इति "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः"
व । स्वतः अपहताः नष्टाः पाप्मानो जन्मादयः ( जायते अस्ति वर्द्धते
गमते अपक्षीयते नश्यति इति) षड्विकाराः यस्मात् तथाभूताय। तथा सकलदेहिनां
णिनामात्मने आत्मरूपेण हृदि स्थिताय । "हृदि ह्येष आत्मा" "इहैवान्तः शरीरे
स पुरुषः " इति श्रुतिः " ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति " इति श्री-
ीता च। कमलवासिनी लक्ष्मीः तस्याः नयनसौख्यस्य नेत्रसुखस्य संदायिने
काय । तमसः अज्ञानस्य अन्धकारस्य वा शमं शान्तिं विधत्ते
तच्छीलः तस्मै । तरणेः सूर्यस्य " द्युमणिस्तरणिर्मित्रः " इत्यमरः ।
बिम्बमध्ये " बिम्बोऽस्त्री मण्डलं त्रिषु " इत्यमरः । तिष्ठति तच्छीलः तस्मै

' संधायिने '.

पुनः सभक्त्युन्मेषम्—

भानुभानुदलदब्जलोचनं भक्तलोकभवपाशमोचनम् ॥
धाम तामरसवासिनीसखं हेमवर्णमिह सौति मे सुखम् ।

कृशा०—किमरे[1] केवलं निर्घृणोऽपि नारायणो भवता विवेकल[2]
स्तवनभाजनीक्रियते ! ॥ ३ ॥

तथाहि—

स्वेनादौ निखिलं[3] जगद्विरचितं स्वेनैव संरक्षितम्
भिन्दन् हन्त मुकुन्द एष विधृतानन्दो हि निन्दोचितः

---

भगवते नमः । अस्त्विति शेषः । पृथ्वी वृत्तम् । लक्षणं प्राक् ( १२ श्लो०
कथितम् ॥ १३ ॥

पुनः भक्तेः प्रेमपूर्वकानुध्यानस्य "प्रेमपूर्वमनुध्यानं भक्तिरित्यभिधीयते
गमात् । उन्मेषेण विकासेन सहितं यथा भवति तथा प्राहेति शेषः ॥

**भान्विति** । भानोः सूर्यस्य भानुभिः किरणैः "भानुर्हंसः सहस्रांशुः
करो मरीचिः स्त्री" इत्युभयत्राप्यमरः । दलती विकासमाने ये अब्जे कमले
लोचने यस्य तत्, अत्रोपमावाचकस्येवशब्दस्य लोपात् लुप्तोपमेयम् "
समासे सा" इति तल्लक्षणात् । भक्तानां भजकानां लोकः समुदायः तस्य
पाशः संसारपाशः तस्य मोचनं निवारकम् । पुनः कथंभूतम् । तामरसवासि
निवासिनी लक्ष्मीः "पङ्केरुहं तामरसं सारसं सरसीरुहम्" इत्यमरः । तस्य
मित्रभूतं इति तत् । "राजाहः-सखिभ्यष्टच्" इति समासान्तष्टच्प्रत्ययः
हेम सुवर्णं "सुवर्णं हेम हाटकम्" इत्यमरः । तत् इव वर्णो यस्य तत् ।
धाम वैष्णवं तेजः इहेदानीं इह सूर्यमण्डले वा । मे मम सुखं सौति जनयि
दयतीति यावत् । रथोद्धता वृत्तम् "रान्नराविह रथोद्धता ल-गौ" इति तल्लक्षणा

एवं नारायणवर्णनं श्रुत्वा तत्रापि निर्दयत्वरूपं दोषमुद्भाव्याह कृशानुः
इति । अरे विश्वावसो, केवलमत्यन्तं निर्घृणो निर्दयो नारायणोऽपि भवता
वेकस्य सदसद्विवेचनस्य लाभः प्राप्तिर्यस्यास्तीति तथाभूतेनापि सता, स्तवन
त्रस्य भाजनीक्रियते पात्रीक्रियते योग्य इव क्रियत इति यावत् । "यो
नयोः पात्रं" इत्यमरः । किम्? आश्चर्यमिदमिति भावः । भाजनीक्रिय
अभूततद्भावे च्विः । अभूततद्भावो नाम वर्णनीये वस्तुनि वर्ण्यधर्माभावे
तद्धर्मारोपकरणम् । एवं चात्र वस्तुतो निर्दयत्वान्नारायणः स्तवनभाजनम
तदिव कृतः एतदयुक्तमिति कृशानुना सूचितमिति ज्ञेयम् ॥ ३ ॥

तथाहि निर्दयत्वमेवोपपादयति—**स्वेनेति** । हि यस्मात् कारणात् ए

---

१ 'किमये' २ 'विवेकलोभवता' ३ 'सकलं'

उत्पाद्य स्वयमुत्तमान् फलतरूनुल्लास्य चारूदकै-
रुन्मत्तोऽपि किमुच्छिनत्ति जगति च्छित्त्वापि किं नन्दति? ॥१५॥

किंच—

स्वानुज्ञामनवाप्य दर्पभरतः स्वाज्ञां विलङ्घेत य-
स्तस्यैवेह तनोति लौकिकनृपश्चण्डोऽपि दण्डं रुषा ॥
अन्तर्याम्यपथे प्रवर्त्य भविनो हन्त स्वयं नारके
यस्तान् पातयति क्रुधा स तु न किं? नारायणो निर्घृणः ॥ १६ ॥

---

राजनीकृतो मुकुन्दो नारायणः, आदौ सृष्टिकाले स्वेन रजोगुणीभूतचतुर्मुख-
ण, निखिलं संपूर्णं "समस्त-निखिलाखिलानि निःशेषम्। समग्रं सकलं पूर्णम्"
तोऽमरः। जगद्विश्वं विरचितमुत्पादितं, तथा स्वेनैव सत्त्वगुणरूपविष्णुस्वरूपेण
तं पालितं, एतादृशमिदं जगत्, पुनः स्वत एव भिन्दन् विनाशयन् तमोगुणरू-
वरूपतयेति भावः। एतावत् कृत्वैव न स विरराम, किं तु पुनर्विधृतानन्दः युक्तं
मयेति मत्वा मोदमान इत्यर्थः। अत एवायं निन्दोचितः निन्दितुं योग्यो न तु
योग्य इत्यर्थः। हन्तेति विषादे। एतदेव लौकिकोदाहरणेन दृष्टान्तयति—**उत्पा-
**। जगति लोके यः कश्चित् उन्मत्तोऽपि, न तु सावधान इति अपिशब्दस्वार-
। स्वयं उत्तमान् फलतरून् फलदान् वृक्षान्, उत्पाद्य भूमौ बीजं निक्षिप्य
रितान् कृत्वा, अपि च चारूणि वृक्षपोषणपर्याप्तानि च तानि उदकानि जलानि तैः
पोषणपर्याप्तजलसेचनैरित्यर्थः। (यद्यप्यमरे "सुन्दरं रुचिरं चारु" इति चारु-
स्य सुन्दरवाचकत्वं, तथाप्यत्र जलस्य वृक्षपोषणेनैव सुन्दरत्वमित्यभिप्रेत्यायमु-
क्तोऽर्थः कृत इति ज्ञेयम्।) उल्लास्य संवर्ध्य, स्वयमेव उच्छिनत्ति किम्? अपि च
अपि नन्दति आनन्दं करोति किम्? अपि तु नैव छिनत्ति नैव नन्दति चेत्यर्थः। यदि
साधारणोऽपि जनः "विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्" इति नयमनुसृत्य
उत्पादितस्य स्वत एवोच्छेदकरणमनुचितमिति जानाति, तर्हि यस्त्रिलोकीमुत्पा-
पालयति च, तेन नारायणेनायं नयः किं न ज्ञातुं शक्यः? अपि तु शक्य
तथापि यदायं स्वयमुत्पादितान् लोकान् बुद्धिपूर्वकं विनाशयति, तदायमत्यन्तं
एवेति भावः। अत्र प्रकृतवाक्यार्थस्य 'स्वेनादौ–' इत्यादेः तद्घटकस्य 'उत्पाद्य'
वाक्यार्थस्य च बिम्बप्रतिबिम्बभावात् वैधर्म्येण दृष्टान्तालंकारः। तदुक्तम्-
न्तः पुनरेतेषां (उपमादीनां) सर्वेषां प्रतिबिम्बनम्" इति। शार्दूलविक्रीडितं
। लक्षणमुक्तं प्राक् (२ श्लोकटीकायाम्) ॥ १५ ॥

च **स्वानुज्ञामिति**। यः कश्चित् जनः सेवको वा दर्पभरतः गर्वातिशयाद्धेतोः,
त्तसिल्। स्वस्य (लौकिकनृपस्य) अनुज्ञां संमतिं अनवाप्य अगृहीत्वा,
(लौकिकनृपस्य) आज्ञां विलङ्घेत उल्लङ्घेत, तदा चण्डः अतिकोपयुक्तः
स्त्वत्यन्तकोपनः" इत्यमरः। अपि, लोके भवः लौकिकः स चासौ नृपश्चेति



; . [ - त्र । र्- तु- ।। नु- :? शां ारा — ते'.

**वि०—अहो ! तव मतिरतिस्थूला, यतः परमकारुणिकं भगवन्**
**पङ्कजवासिनीप्राणनाथमपि स्पृशति तवोपालम्भः । आकर्णयेदम्**

चिराय संसृत्युदधौ समज्जनं
नमज्जनं मज्जन इत्यधोक्षजः ॥
दयापयोधिः परिगृह्य दुर्लभं
निजं पदं प्रापयति स्वयं प्रभुः ॥ १७ ॥

---

विग्रहः । लौकिको राजेत्यर्थः । रुषा स्वाज्ञोल्लङ्घनजनितक्रोधेन, तस्यैव आज्ञोल्ल
इह दण्डं शिक्षां तनोति करोति । न त्वन्यस्यानपराधिन इत्यर्थः । योऽयं
खु अन्तः मनः यमयति प्रेरयति तच्छीलः अन्तर्यामी । ताच्छील्ये णिनि
तिष्ठन् शुभाशुभकर्मप्रेरक इत्यर्थः । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति
यन् सर्वभूतानि यन्त्रारूढानि मायया" इति स्मृतेः । एतादृशः सन्
एव भविनः संसारयुक्तान् जनान् अपथे दुर्मार्गे दुष्कर्मणीत्यर्थः
स्वयमेव तान् दुष्कर्मकर्तॄन् जनान्, क्रुधा रोषेण नारके निरये "स्य
नरको निरयो दुर्गतिः स्त्रियाम् ।" इत्यमरः । पातयति । हन्तेति खे
निर्घृणः निर्दयः न किम् ? अपि त्वत्यन्तं निर्घृण एवेत्यर्थः । अयमाशयः—लौ
हि अपराधिनमनपराधिनं च दृष्ट्वैव अपराधिनं दण्डयति, स्वनियमप्रसिद्ध्या च
नीतिपथमनुशिक्षयति च; अयं ( नारायणः ) तु यद्यन्तर्यामी, तर्हि अनेन
लोकाः सन्मार्गे एव प्रवर्तयितव्याः, तथा सति सर्वेऽपि जनाः सत्कर्माणि कृत्
मेवाप्नुयुः, न कश्चिदपि दुर्गतिं, परं तु तदकुर्वन् यदा दुष्कर्मण्येव प्रवर्त
गमयति तदाऽत्यन्तं निर्घृण इति । अत्र 'स्वानुज्ञामनवाप्य—' इत्यादि
विवक्षितवचनेन हेतुत्वात् काव्यलिङ्गमलंकारः, उत्तरत्र अपराधकारणाभावेऽपि
कार्यकथनात् विभावनालंकारः । एवं च उभयत्रापि परस्परवाक्यापेक्षण
भावाच्च द्वावपि मिलित्वा संकरालंकारः । तदुक्तम्—" अविश्रान्तिजुषामात्म
त्वं तु संकरः" इति । वृत्तं च शार्दूलविक्रीडितम् । लक्षणं (२ श्लो०टी ) पूर्वोक्तमेव

अथ कृशानुना उद्घाटितं निर्घृणत्वरूपं दोषं परिहरन्नाह **विश्वावसुः**—
इति । अहो इत्याश्चर्ये । अथवा अहो इति संबोधनार्थम्, हे कृशानो इत्यर्थः । त
बुद्धिः अतिस्थूला सदसद्विवेकशून्या । कुत इत्यत आह—यतः यस्मात् व
परमकारुणिकमत्यन्तदयालुं " स्याद्दयालुः कारुणिकः " इत्यमरः । भगवन्तं
णैश्वर्यसंपन्नं, पङ्कजवासिन्या लक्ष्म्याः प्राणनाथं पतिं नारायणमपि, तव संबन्धी
इत्यर्थः । उपालम्भो निन्दा स्पृशति परामृशति, तमपि निन्दसीति यावत् ।
इदं नारायणविषये करुणाप्रतिपादकं वचः, आकर्णय सावधानमनसा शृणु

**चिरायेति** । दयापयोधिर्दयासागरः, अनेन नायं लोक इव केनचित्
दयाशीलः, किंतु कारणं विनापि स्वभावत एवापरिमितदयाशील इति सूचितम्

किंच—

लीलालोलतमां रमामगणयन्नीलामनालोकयन्
　　मुञ्चन् किंच महीमहीश्वरमयं मञ्चं हठाद्वञ्चयन् ॥
आकर्षन् द्विजराजमप्यतिजवाद्धा हन्त लोकान्तरात्
　　गोप्तुं शौरिरुदित्वरत्वर उदैत् ग्राहग्रहार्तं गजम् ॥ १८ ॥

यं नारायणः संसृतिरूपे संसाररूपे उदधौ समुद्रे, चिराय बहुकालपर्यन्तं, सम-
नेन परिभ्रमणेन सहितः तं, परं तु संसारदुःखपरिहारायेति शेषः । नमन्
कं नमस्कुर्वंश्चासौ जनो लोकश्च तं, मज्जनः मदीयोऽयं जन इति एवंप्रकारेण
रिगृह्य स्वीकृत्य, इतिवः कर्मणः अभिहितत्वात् प्रथमा । प्रभुः कर्तुमकर्तुमन्यथा
 समर्थः, दुर्लभं भक्त्या विना दुष्प्रापं, निजमात्मीयं पदं स्थानं वैकुण्ठलोक-
 । प्रापयति नयति । अत्र पद्ये पूर्वार्द्धे अनुप्रासालंकारः, तच्च वाक्यं निज-
 स्वीकरणस्य निजपदप्रापणस्य च हेतुरूपं, तेन काव्यलिङ्गमलंकारः । एवं चात्र
ङ्गानुप्रासयोः संसृष्टिः " सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः " इति
ात् वंशस्थवृत्तम् । लक्षणमुक्तं प्राक् (१० श्लोकटीकायाम्) ॥ १७ ॥

क्तं 'नमज्जनं मज्जन इति परिगृह्य निजं पदं प्रभुः प्रापयति' इति, तदेव कैश्चित्
सिद्धैस्तदवतारचरित्रैः स्पष्टमाह—तत्र तावत् प्रथमं भगवत्कृतं गजेन्द्रमोक्षं
**—लीलेत्यादिना** । किंच ग्राहस्य नक्रस्य "ग्राहोवहारो नक्रस्तु" इत्यमरः ।
ग्रहणात् आर्तं पीडितं गजं हस्तिनं "दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः।
 गजो नागः" इत्यमरः । गोप्तुं रक्षितुं, उदित्वरा आविर्भवन्ती त्वरा संभ्रमो
 उदित्वरे त्यत्र उत्पूर्वकात् 'इण् गतौ' इत्यस्मात् धातोः सकाशात् "इण्-न-श-
भ्यः क्वरप्" इति क्वरप्प्रत्ययः "ह्रस्वस्य पिति कृति—" इति तुक् । शूरस्य वसुदेवस्य
शौरिः "अत इञ्" इत्यपत्यार्थे इञ् । कृष्ण इत्यर्थः । लीलया शृङ्गारभावेन "हेला
ी हावाः क्रियाः शृङ्गारभावजाः" इत्यमरः । अतिशयं लोला कामतृष्णायुता
ोलश्चल-सतृष्णयोः" इत्यमरः । रमां, लक्ष्मीं अगणयन् अपश्यन्, नीलां
 अनालोकयन् तामप्यपश्यन्नित्यर्थः। भगवता हि कृष्णावतारे कालिन्दीनाम्न्या-
त्याः स्त्रियाः स्वीकारः कृतः इति श्रीभागवते दशमस्कन्धे प्रसिद्धम् । यद्वा
ग्नजिती तस्मिन्नेवावतारे परिणीता ज्ञेया । "नीलां नग्नजितः पुत्रीं" इति
रीकाव्ये तथा दर्शनात् । किंच महीं पृथिवीदेवीं मुञ्चन् त्यजन्, पृथिव्यपि
ीति "समुद्रवसने देवि पर्वतस्तनमण्डले । विष्णुपत्नि नमस्तुभ्यम्—"
मप्रसिद्धम् । तथा अहीश्वरमयं शेषस्वरूपं मञ्चं शयनं च "शयनं मञ्च-पर्यङ्क—"
 । हठात् सहसा वञ्चयन् तिरस्कुर्वन्, अपि च द्विजानां पक्षिणां राजा गरुडस्तं,
ः-सखिभ्यः—" इति टच् । "दन्त-विप्राण्डजा(पक्षिणः) द्विजाः" इति "गरुत्मान्

उपैत्'.

वैकुण्ठो महताहताखिलमहारम्भं मदेनोच्चकै–
श्चण्डं खण्डयितुं हिरण्यकशिपुं वेतण्डमुत्कण्ठया ।
सैंहं वेषमशेषभीषणमहो गृह्णन् त्वरागौरवात्
प्रह्लादव्यसनासहिष्णुरुदगादाकण्ठकण्ठीरवः ॥ १

गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः" इति चामरः । आकर्षन् भक्तपीड
सत्वरं गन्तुमित्यर्थः । लोकान्तरात् वैकुण्ठात्, अतिजवात् अतिवेगेन, उ
मत् 'इण् गतौ' इति धातोः कर्तरि लङ् । हा हन्त इति निपातसमुदायात्
परिहारार्थमत्यन्तदयावत्त्वं भगवतः सूच्यते "हा विषाद-शुगर्तिषु । हन्त
म्पायां" इत्यमरात् । एतेन पद्येन यदि गजस्य पशोरपि भक्तिं दृष्ट्वा तत्रा
वान् एवं करोति, तदा मनुष्यार्थं कुर्यादित्यत्र किमु वक्तव्यमिति सूचितम्
कथा महाभारते शान्तिपर्वणि प्रसिद्धा । यथा–चित्रकूटपर्वते एकं प
सरोवरमासीत्। यस्मिन्नेको महानक्रः प्रतिवसति स्म । तस्मिन्नेव सरसि क
णीभिः सह कश्चिन्महागजः समाययौ। स च जले प्राविशत् । तदा स नक्रेण
सुदृढं पादे धृतः । तदा गजस्तं नक्रं केनाप्युपायेन निवारयितुमशक्नुवन्न
भगवन्तं नारायणमेव शरण्यं मत्वा पुष्कराग्रेण सरःस्थमेकं पङ्कजं तस्
"ॐ नमो मूलप्रकृतये अजिताय महात्मने ।" इत्यत आरभ्य "नमस्ते
काक्ष भक्तानामभयंकर । सुब्रह्मण्य नमस्तेऽस्तु त्राहि मां शरणागतम् ।
मे दुःखं चिन्ता संसारसागरे । यावत् कमलपत्राक्षं न स्मरामि जनार्दनम्।
स्तोत्रं जगौ । तदा परमकारुणिको भगवान् सत्वरमुपेत्य ग्राहात् गजममो
शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

अथ नृसिंहावतारे कृतं निजभक्तस्य प्रह्लादस्य रक्षणमाह—**वैकुण्ठ इति**
हिरण्यकशिपुपुत्रस्य स्वभक्तस्य व्यसनासहिष्णुः तत्पित्रा दीयमानं दुःख
" अलंकृञ्-निराकृञ्–"इत्यादिना इष्णुच् प्रत्ययः। वैकुण्ठोऽयं नारायणः वि
पराभवं प्रापयति शत्रूनिति विकुण्ठः 'कुठि प्रतिघाते' इति धातोः "अन
दृश्यन्ते"इत्युणादिसूत्रेणाच्प्रत्ययः। विकुण्ठ एव वैकुण्ठः इति विग्रहः। "विष्णु
कृष्णो वैकुण्ठः" इत्यमरः । महता मदेन गर्वेण, हता विनाशिताः अखिला
महान्तः आरम्भाः यज्ञयागादिकाः क्रिया येन तं, गजपक्षे तु महता मदेन
उपलक्षितं, महान् आरम्भो येषां ते महारम्भाः हताः अखिला महारम्भा
पवनादयो येन तं, उच्चकैरतिशयेन चण्डं महाभयंकरं हिरण्यकशिपुं एतद्रूप
गजं, खण्डयितुं विनाशयितुं, उत्कण्ठया हिरण्यकशिपुरूपगजमारणातिशय
त्वरायाः शीघ्रतायाः गौरवात् अतिशयेन अतीव शीघ्रमित्यर्थः । अशेषाणां
( शत्रूणां ) भीषणं भयंकरं, सैंहं सिंहसंबन्धिनं वेषं आकारं, गृह्णन् धारय

१ 'महसा'.

